तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

मार्च् - २०१९, रू.५/-



२०१९ मार्च् १६ तः २० पर्यन्तम्
तिरुमल श्रीवेङ्कटेश्वरस्वामिनः
प्लवोत्सवः

तिरुमलतिरुपतिदेवस्थानम्

# तरिगोण्डा
# श्रीलक्ष्मीनरसिंहस्वामिनः ब्रह्मोत्सवः

## १३.०३.२०१९ तः २१.०३.२०१९ पर्यन्तम्





**१३.०३.२०१९ बुधवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - हंसवाहनम्

**१४.०३.२०१९ गुरुवासरः**
प्रातः - मौक्तिकमण्डपम्
रात्रौ - हनुमद्वाहनम्

**१५.०३.२०१९ शुक्रवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सिंहवाहनम्

**१६.०३.२०१९ शनिवासरः**
प्रातः - तिरुचि उत्सवः
रात्रौ - महाशेषवाहनम्

**१७.०३.२०१९ भानुवासरः**
प्रातः - तिरुचि उत्सवः
रात्रौ - गजवाहनम्

**१८.०३.२०१९ सोमवासरः**
प्रातः - तिरुचि उत्सवः
सायं - सर्वभूपालवाहनम्
रात्रौ - गरुडवाहनम्

**१९.०३.२०१९ मङ्गलवासरः**
प्रातः रथोत्सवः
सायं - धूलि उत्सवः

**२०.०३.२०१९ बुधवासरः**
प्रातः - सूर्यप्रभावाहनम्
रात्रौ - चन्द्रप्रभावाहनम्, अश्ववाहनम्

**२१.०३.२०१९ गुरुवासरः**
प्रातः - वसन्तोत्सवः, चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्





# गीतामृतम्



अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स सन्यासी च योगी च न निरग्निर्न चाक्रियः।।

(भगवद्गीता ६/१)

श्री भगवान् एवं वदति - यः पुरुषः कर्मफलस्य आश्रयं न स्वीकृत्य कर्तुं योग्यं कर्म करोति, सः सन्यासी तथा च योगी इति कथ्यते। केवलम् अग्नित्यागेन, क्रियाणां त्यागेन च कोऽपि सन्यासी अथवा योगी न भवति।

# सङ्कीर्तनम्



त्वमेव शरणं त्वामेव मे
भ्रमणं प्रसरति फणीन्द्रशयन ।।त्वमेव।।

कदा वा तव करुणा मे
सदा दैन्यं सम्भवति
चिदानन्दं शिथिलयति
मदाचरणं मधुमथन ।।त्वमेव।।

मया वा तव मधुरगति
भयादिक विभ्रान्तोहं
तथा विमलं दातव्या
दया सततं धरणीरमण ।।त्वमेव।।

घनं वा मम कलुषमिदं
अनन्त महिमाय तस्य ते
जनार्दन इति सञ्चरसि
घनाद्धन वेङ्कटगिरिरमण ।।त्वमेव।।

(श्री अन्नमाचार्यस्य संस्कृतसङ्कीर्तनानि)

शरण्यः सर्वेश्वरः एक एव इति ज्ञात्वा भक्तः भगवन्तं सर्वप्रकारैः आश्रित्य आत्मानम् उद्धर्तुं प्रार्थनां करोति। देवदेवः शीघ्रं माम् उद्धरेत् इति तीव्रेच्छा भक्तस्य भवति। अतः भक्तः भगवन्तं बहुप्राकरैः सम्बोध्य पुनः प्रार्थयति। मयि विद्यमानदोषा एव माम् उद्धर्तुम् अवरोधाः स्युः इति भावना कदाचित् मनासि उदेति। तथापि भगवान् दयाधिक्यात् माम् उद्धरिष्यत्येव इति सविश्वासं दृढं प्रार्थयति। यथा घनीभूताः मेघाः भूमौ विद्यामानानां गुणदोषान् अविचिन्त्य वर्तन्ते तथैव घननीलवर्णः मधुसूदनः कथं मां नोद्धरिष्यति इति भावः अस्यां कीर्तनायां प्रकाशितः।



# ''हरहरमहादेव शम्भो!''

''दारिद्र्यदुःखदहनाय नमशिशवाय'' - विश्वविज्ञानचिन्तकाः जीवनविधानान् परिशील्य परमात्मा एक एव इति, सृष्टि-स्थिति-लयकर्तारः ब्रह्मा-विष्णु-महेष्वराः इति भावयन्ति। विश्वाधारभूतः परमात्मा अवस्थाभेदेन नानारूपेषु स्थितः इति ज्ञात्वा विविधाकृतिषु तस्य पूजाकरणम् अस्माकं सम्प्रदायरीत्या समागतम्। श्रीमन्नारायणः एव तत्तत्सन्दर्भेषु नाना रूपान् स्वीकरोतीति, विश्वव्याप्तः इति अस्माकं विश्वासः वर्तते।

शिवः लयकर्ता इत्युच्यमानेऽपि-शिवतत्वं शान्तिकारकं, कल्याणकारकं, लौकिकनिराडम्बरतायाः आध्यात्मिक-सुसम्पन्नतायाः निदर्शनतया अनुभूयते। भक्तैः समायाचिते सति झटिति वरप्रदाता सः भोलाशङ्करः इति आख्यायते। केवल जलाभिषेकेन सन्तुष्टः सन् भक्तवाञ्छाः पूरयति। परमशिवम् एकाग्रचित्तेन पूज्यमाने सति 'मृत्युञ्जयत्वम्' अपि प्रसादयति।

वेदविदुषः एनं 'लयाधिपति' रूपेण किमर्थं वदन्तीति अस्माकं हृदयेषु प्रश्नः समायाति। जन्मप्रभृति काम, क्रोध, लोभादीनाम् अरिषड्वर्गान्, पापान्, दुर्गुणान् लयं करोतीति कारणादेव सः लयाधिपतिः इत्युच्यते। स्मशाने निवासं कुर्वन्, गजचर्म धृत्वा, आदिभिक्षुरूपेण दृश्यमाने सति शिवरूपस्य अद्भुतसन्देशः प्राप्यते। प्रत्येकमनुष्यः आदिभिक्षुः एव। लौकिकसुखानां भावः निर्गते सति सर्वेऽपि परमेश्वरं ''मृत्युञ्जयत्वं'' प्राप्तुं भिक्षाटनं कुर्वन्ति। स एव मोक्षः इति कथ्यते। निराडम्बरस्य प्रतीक एव गजचर्म।

पर्वदिनेषु, उत्सवदिनेषु च भगवतः पूजाकरणम्, आचाराणां पालनं च अस्माकं सम्प्रदायरूपेण भाव्य कुर्मः। तस्य उत्सवस्य अन्तरार्थं ज्ञात्वा तद्रूपेण जीवनविधानमवलम्बयामश्चेत् मानवः महर्षिरूपं स्वीकरोति।

मार्च-४ 'महाशिवरात्रि' पर्वदिनम् वर्तते। तस्मिन् दिने परमेश्वरं महाभिषेकैः सम्पूज्य पवित्राः भवामः। इतः पूर्वं ज्ञात्वा-अज्ञात्वा कृतान् पापान् प्रक्षालयामः। परमशिवस्य सान्निध्यं प्राप्नुमः।

तिरुपतिस्थ श्रीकपिलेश्वरदेवालये 'महाशिवरात्रि' उत्सवः, श्रीकपिलेश्वरस्वामिनः ब्रह्मोत्सवः तिरुमलतिरुपतिदेवस्थानपक्षतः विशेषतया सम्पाद्यते। विविधवाहनेषु भ्रममाणः स्वामी भक्तान् अनुगृह्णाति। श्रीकपिलेश्वरस्वामिनं संदर्श्य अस्मत्सु विद्यमानान् कल्मषान् प्रक्षालनं कृत्वा पुनीताः भवामः। सः भूतपतिः अस्मत्सु स्थितम् 'अज्ञानान्धकारम्' लयं कृत्वा 'ज्ञानं' प्रसादयतु इति प्रार्थयामः।

'तन्मे मनशिशवसङ्कल्पमस्तु'

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०५ सञ्चिका-१२

# मार्च् -२०१९

श्रीविलम्बिनामसंवत्सरस्य माघकृष्णदशमी
फाल्गुणकृष्णैकादशी पर्यन्तम् - १९४०



# सप्तगिरिः


| | |
|---|---|
| वेदनारायणस्वामिनः प्लवोत्सवः<br>- डा. सि.आदिलक्ष्मीः | 06 |
| वैकुण्ठद्वारपालकाभ्यां शापः<br>- श्री पङ्कजकुमार शर्मा | 09 |
| सप्तगिरिपरिसरप्रान्तेषु महाशिवरात्रिमहोत्सवः<br>- श्री डि.चैतन्यकृष्णः | 15 |
| बुद्धिनाशात्प्रणश्यति<br>- श्री किशनलाल जोशी | 19 |
| सर्वसिद्धिकारकं तुम्बुरुतीर्थम्<br>- डा.एम्.जि.नन्दनराव् | 20 |
| आरोग्यदिव्यामृतं त्रिफलाचूर्णम्<br>- श्री डि.हरिकृष्णः | 22 |


गौरवसम्पादकः-
श्री अनिलकुमार सिङ्घाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः:
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

वर्णचित्रविन्यासकः - श्री पि.शिवप्रसादः, ति.ति.दे.,
विश्रान्तचित्रकारः

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

मुखचित्रम् - श्रीवेङ्कटेश्वरस्वामिनः प्लवोत्सवः, तिरुमल
अन्तिमरक्षापुटः - श्रीमहालक्ष्मीः



सङ्केतः
प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
संपर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

- डा.सि.आदिलक्ष्मीः

# वेदनारायणस्वामिनः प्लवोत्सवः

२४.०३.२०१९ - २८.०३.२०१९
नागुलापुरम् श्रीवेदनारायणस्वामिनः
प्लवोत्सवसन्दर्भे...

श्रियःपतिः सर्वेश्वरेश्वरः भगवान् वासुदेवः भक्तसंरक्षणार्थं तत्तद्युगानुसारेण रामकृष्णाद्यवतारेण अवतीर्य भक्तानां कामान् प्रपूरयति। सकलजगत्कारणभूतः श्रीमहाविष्णुः साधुसंरक्षणार्थं दुष्टविनाशार्थं अवतारः स्वीकरोति।



परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्म संस्थापनार्थाय संभवामि युगे युगे।।

धर्मसंस्थापनार्थाय नारायणः दशावताराः धृतवानिति। तत्र प्रथमावतारः मस्त्यावतारः। द्वितीयावतारः कूर्मः तृतीयः वराहः, चतुर्थः नृसिंहः इत्थं भगवतः दशावताराः विष्णवांशाः सङ्कर्षणादयः नारदीयसंहितायां मस्त्याद्यवताराणामुद्भवक्रमः एवं वर्णिमस्ति -

मस्त्यकूर्मौ द्विजश्रेष्ठ ज्ञेयौ सङ्कर्षणांशकौ
वराहश्चानिरुद्धांशः सर्वविद्येश्वरः प्रभुः
अनिरुद्धांशजः श्रीमान् नृसिंहोऽसुरसूदनः
वासुदेवांशको देवो वामनः सकलेश्वरः।
तथा परशुरामश्च रामो दाशरथिस्तथा।
सङ्कर्षणांशादुद्भूतौ क्षत्ररक्षौ विरोधिनौ
वसुदेवसुतः कृष्णः वासुदेवांशजः स्मृतः।
प्रद्युम्नांशात्समुद्भूतौ बुद्धो मुनिवरो वशी
कल्की सङ्कर्षणांशस्तु देवदेवो जगद्गुरुः।

देवदेवः जगत्पतेः मस्त्यावतारः प्रथमावतारः। वेदानां संरक्षणार्थं मीनाकृतिं नारायणः धृतवान्।

यो वेदापहरं दिवौकसरिपुं शंखाभिधं चार्णवे,
तिष्ठन्तं सकलामरार्तिकरणं चक्रेण हत्वा पुनः।
धात्रे सर्वश्रुतीरदाच्च कृपया स प्राप्त मीनाकृतिः,
पायाद्वो भगवान् पुराणपुरुषो लक्ष्मीपतिमङ्गलम्।।

वेदापहरं सोमकासुरं मीनाकृतौ चक्रेण हत्वा पुनः धात्रे सर्वश्रुतीरदात् चक्रिः। सैव वेदनारायणः नागुलापुरे मस्त्यावतारे विलसितवान्। बहु पुरातन आलयः वेदनारायणालयः चित्तूरुजिल्लायां ७० दूरे वर्तते। नागुलापुरस्य वेदपुरी, वेदारण्यक्षेत्रं, वेदनारायणपुरमिति नामान्तराणि सन्ति। सन्तानकांक्षिणः विशेषेण मस्त्यावतार स्वरूपिणीं वेदनारायणं दर्शयन्ति पूजयन्ति च। प्राचीनशिल्पसौन्दर्यस्य प्रतिनिधिरूपेण

विराजमानस्यास्य आलयस्य श्रीकृष्णदेवरायः दर्शयित्वा विशेषाभिवृद्धिं कृतवानिति चरित्रकाराः वदन्ति। मत्स्यमूर्ति स्वरूप दर्शनेन भक्तानां आयुरारोग्यैश्वर्य प्राप्तिर्भवतीति जनाः विशेषेण नागुलापुरक्षेत्रं दर्शयन्ति। नारदीयसंहितायां मत्स्यमूर्तिसाधन प्रकारः बहुवर्णितमस्ति।

वेदनारायणस्वामिनः विविधोत्सवाः विशेषण प्रचाल्यन्ते। उत्सवाः त्रिविधाः नित्यनैमित्तिककाम्यश्चेति।

**वत्सरे वत्सरे यस्तु क्रियते स नित्यकः!**

नैमित्तिकोत्सवस्य लक्षणं नारदीय संहितायां इत्थं वर्णितमस्ति -

**भूमिकम्पे दिशां दाहे महोत्पातेषु सत्सु च**
**दुर्भिक्षे व्याधिते राष्ट्रे तथा वै शत्रुसङ्कटे।**
**अनावृष्टौ च समये नक्षत्रपतने च खात्**
**व्यत्यासे दिशि सूर्यस्य देवताहसने सति।**
**रोदने चाङ्गचलने बिम्बे चलति चासनात्।**
**शान्त्यर्थं यत् प्रकुर्वीरन् स नैमित्तिक उच्यते।**

**फलेच्छया कृतो यस्तु कामिभिः काम्य उच्यते।**

एकैकोत्सवस्य षड्विधः नारदीयसंहितायां वर्णितः।

**द्वादशाहो नवाहश्च सप्ताहश्च तथापरः।**
**पञ्चाहस्त्रियहो विप्र तथैकाहस्तु कीर्तितः।**

एवं त्रिविधोत्सव निर्वहणेन सकलदोषप्रशमनं राजाराष्ट्राभ्युदयं, परवासुदेवसायुज्यसिद्धिः, लोककल्याणं, शान्तिश्च भवन्तीति वेदोक्तवचनम्। वेदनारायणस्वामिनः कृतेषु संवत्सरोत्सवेषु प्लवोत्सवः एकः। प्लवोत्सवविधिविधानं श्रीपाद्मतन्त्रप्रयोगे वर्णितमस्ति -



**त्रिविधोत्सव निर्वहणेन सकलदोषप्रशमनं राजाराष्ट्राभ्युदयं, परवासुदेवसायुज्यसिद्धिः, लोककल्याणं, शान्तिश्चा भवन्तीति वेदोक्तवचनम्। वेदनारायणस्वामिनः कृतेषु संवत्सरोत्सवेषु प्लवोत्सवः एकः। प्लवोत्सवविधिविधानं श्रीपाद्मतन्त्रप्रयोगे वर्णितमस्ति**

प्रथमं मध्ये तीरे च प्राङ्मुखमण्डपद्वययुतं सरः कल्पयित्वा प्रतिष्ठाप्य शैशिरादि त्रयेषु शुक्लपक्षे अथवा कृष्णपक्षे दशम्यन्तं वा, नव सप्त पञ्च त्रिदिनानि धर्मार्थकाममोक्ष फलप्रदानि। तेषु एकस्मिन् अनुकूलर्क्षे सङ्कल्प्य तद्दिनात् पञ्चमे तृतीयाह्ने वा पूर्वमङ्कुरार्पणं रक्षाबन्धनं च कृत्वा प्रभाते आचार्यः यजमानेन सह मूलमन्दिरं गत्वा प्रणम्य प्राञ्जलिस्सन्

**देव देव जगन्नाथ भक्तवत्सल माधव।**
**अज्ञत्वादल्पशक्तित्वाद्यथोक्तं कर्तुमक्षमः।।**
**प्लवोत्सवं तु निर्विघ्नं अङ्गीकुरु दयानिधे!!**

इति विज्ञाप्य शयनबिम्बं यागमण्डपं नीत्वा पवित्रोत्सववत् द्वारादि मण्डलार्चनान्तं कृत्वा अग्निं प्रतिष्ठाप्य पायस, क्रसरगुलहरिद्रान्नैः क्रमेण पुरुषसूक्तेन षोडशाहुतीः हुत्वा समिदाज्यमाषीक-क्षीर-दध्यज्यलाज-कुसुम-फलागरुगुलैः वासुदेवादिमन्त्रैः अष्ठोत्तरशतं अष्टाविंशतीर्वा आहुतीः हुत्वा उत्सवबिम्बं अलङ्कृत्य यानादावारोप्य सर्वमङ्गलैस्सह तीरमण्डपमासाद्य प्राङ्मुखं निवेश्य सरोंभसः शोषणादि कृत्वा पुण्याहं वाचयित्वा गङ्गादीनावाह्य सरः क्षीरार्णवं ध्यात्वा प्लवे योगपीठं सङ्कल्प्य बिम्बं उत्तिष्ठेत्युत्थाप्य भद्रंकर्णेति प्लवे स्थापयित्वा प्रदक्षिणत्रयं पञ्च वा कुर्यात्। तत्र सिंहासने देवमारोप्य अर्घ्यादि नैवेद्यान्तं

सम्पूज्य ''विष्णो रराटमसि'' इति मन्त्रेण पुनः प्लवमारोप्य ग्रामप्रदक्षिण्येनालयं प्रविशेत्। यावदुत्सवावसानं द्वारपूजादि होमान्तं पूर्ववत् कुर्यात्। तद्रात्रौ पूर्णाहुतिं कृत्वा चतुःस्थानान्मले उद्वासयेत्!! महोत्सवविधौ प्लवोत्सवस्य निर्वहणप्रकारः वर्णितमस्ति। तद्यथा -

अथाऽचार्यो महोत्सवतृतीयदिवसे देवीसमन्वितं देवं शिबिकामारोप्य रत्नभूषणैरलङ्कृत्य धामप्रादक्षिण्येन ग्रामप्रादक्षिण्येन वा सरस्तीरं समानीय तत्सरोवरमध्यमण्डस्थ सिंहासने समारोप्य ध्यानादि नैवेद्यान्तमर्चयित्वा मन्त्रासनादि भोज्यासनान्तमर्चयित्वा फलकादिभिः दृढी कृतं चित्रविचित्रवितानाद्यैः पुष्पमाल्यैश्चोपशोभितं विविधाकारैः ध्वजैः दर्पणैश्चामलैरलङ्कृतं नारिकेलं पूग कदलीफलं पयैर्घण्टाभिः किंकिणीभिस्समलङ्कृते प्लवोपरिस्थित मण्डलं मण्टपस्थितं सशेषासनं श्रीवासुदेवपुण्याहोदकेन सम्प्रोक्ष्य तस्मिन् शेषासने गरुडमावाह्य यथाविध्यर्चयित्वा निवेद्य-दहनाप्यायनादिभिः सरस्तोयं संस्कृत्य तस्मिन् दुग्धाब्धिमावाह्य अष्टदिक्षु इन्द्रादीनावाह्याऽभ्यर्च्य कुण्डे वा स्तण्डिले वाग्निं यथाविधि प्रतिष्ठाप्य आज्यभागान्तं हुत्वा ''ओं हां अनन्ताय नमः'' इति शेषमन्त्रेण अष्टोत्तरसहस्रं वा अष्टोत्तरशतं वा आज्येन हुत्वा पुरुषसूक्तेन चरुणा षोडशाहुतीर्हुत्वा संपाताज्यमादाय प्लवं मण्डपं च सेचयित्वा तस्मिन् मण्डपे भद्रं कर्णे ति देवमारोप्य अर्चक दीक्षित परिचारकाः देवस्य परितः भक्तियुक्तास्तिष्ठेयुः। देवस्याग्रेऽन्यस्मिन् प्लवे नृत्यगीतादिकं कुर्वन् मण्डपं त्रिः परिक्रम्य देवदेवं समभ्यर्च्य नारिकेलापूपपृथुकादीन्निवेद्य देवं याने समारोप्य (गरुडादिवाहनेष्वारोप्य) ग्रामप्रादक्षिण्येनालयं प्रविश्य नित्यार्चनं कुर्यात्।

## प्लवोत्सवस्य फलश्रुतिः

परमपुरुषस्य अखिलाण्डकोटिब्रह्माण्डनायकस्य भक्तानुग्रहकाम्यया अर्चारूपे समास्थितस्य भगवतो देवदेवस्य अष्टोत्तरशत संहिताकार श्रीपाञ्चरात्र भगवच्छास्त्रदिव्यागमोक्त प्रकारेण यः यजमानः महोत्सवमनुतिष्ठति सः स्वकुलं समस्तमुत्तार्य विष्णुसायुज्यं गच्छति। अश्वमेधयागसहस्रस्य अथवा सर्वेषां च वेदचोदितानां यागानामनुष्ठाने यत्फलं प्राप्यते महोत्सवानुष्ठाने तदेव फलं प्राप्नोति यजमानः नास्त्यत्र संशयलेश इति महर्षीणामाशयः।



## 'सप्तगिरि' ग्राहकेभ्यः सूचनाः

सप्तगिरि-मासपत्रिकायाः पाठकेभ्यः प्रतिमासं सकाले प्रापणार्थं नानाविधकार्यान् करोतीति अवगतः विषयः एव। अस्मिन्नेव क्रमे भक्तानां सङ्केतानां क्रमीकरणार्थं प्रयत्नं करोति। पाठकाः एनं विषयं दृष्टौ स्थाप्य अधोनिर्दिष्ट प्रकारेण प्रधानसम्पादकस्य कार्यालयं प्रति सम्पर्कं कुर्वन्तु।

१.सप्तगिरि मासपत्रिकायाः सम्बन्धिताः सूचनाः, आक्षेपान् च sapthagiri.helpdesk@tirumala.org द्वारा सूचयितुं शक्नुवन्ति।

२. सप्तगिरि ग्राहकाः सङ्केतस्य परिवर्तन-सम्बन्धी विवराणां कृते ०८७७-२२६४५४३ दूरवाणीं प्रति स्वीय सम्पूर्णं सङ्केतं, दूरभाषा संख्यया साकं कार्यालयस्य कार्यसमये (प्रातः १०.३० तः सायं ५.०० मध्ये) पुनः ज्ञापयन्तु।

३. उपर्युक्त दूरवाणी संख्या द्वारा अथवा sapthagiri.helpdesk@tirumala.org द्वारा वा सूचयन्तु।

४. अन्तर्जाल (आन्लैन्) ग्राहकाः स्वीय सम्पूर्णं सङ्केतं ति.ति.दे. अन्तर्जालपुटे ज्ञापयन्तु!



तेलुगु मूलम् - डा।। वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादः - श्री पङ्कजकुमार शर्मा

# वैकुण्ठद्वारपालकाभ्यां शापः

**वैकुण्ठः श्रीमहाविष्णोः निवासस्थानम् वर्तते। 'कुण्ठः' अर्थात् दुःखम्। दुःखरहितप्रदेशः एव वैकुण्ठः। तत्र वैषम्यस्य लेशभागोऽपि अंशो न विद्यते। आध्यत्मिकवातावरणेन परिपूर्णो वर्तते। तस्य व्यतिरेकतया अस्माकं भौतिकलोकः 'कुण्ठः' दुःखपूर्णः, वैषम्येन व्याप्तः। किन्तु गुरुसाधुसज्ञनानां पार्श्वे शास्त्राध्ययनादिभिः दिव्यदृष्टिं प्राप्य अस्मिन् जगति स्थितान् वैषम्यान् आध्यात्मिकजगति स्थितान् दिव्यत्वान् च द्रष्टुं शक्नुमः।**

भौतिकजगत्यस्मिन् बान्धवेषु कलहः, परस्परदेशयोर्मध्ये वैषम्यान् च वयं प्रतिदिनं पश्यामः। किन्तु एषां कारणविषये प्रश्नः ज्ञानविकासानन्तरमेव उदेति। वैषम्यरहितः वैकुण्ठः इति पूर्वमेवोक्तम्। भगवता सह नित्यसम्बन्धः, प्रेमो वर्धते सति मरणसमये भगवतः स्मरणपूर्वकं भगवद्धामं प्राप्तुं शक्नुमः। अयमेव गीतासन्देशः।

ब्रह्मदेवस्य कुमाराः सनक-सनातन-सनन्दन-सनत्कुमाराः एकदा यथेच्छया सञ्चरन्तः वैकुण्ठं प्राप्ताः। ते चत्वारः लघुबालकसदृशाः आसन्। तत्र सर्वेषां हरिभक्तिमध्ये रमणं, सर्वेषां चतुर्भुजरूपाणि, पीताम्बरधृतवासाः, सेवा प्रतिफलस्य अनेच्छुकाः, मनोहरं वातावरणादिकं च ते दृष्टवन्तः। नैजे तावत् तादृशः वैषम्यरहितप्रदेशः अस्मिन् जगति अपि साध्यः एव। वैषम्यरहितप्रदेशस्य निरूपणाय, सर्वैः आचरणयोग्याय च शिवकुटुम्बः उदाहरणतया कथ्यते। शिवकुटुम्बे परस्परवैषम्यगुणयुतेऽपि स्नेहभावेन सर्वे भवन्ति। शिवस्य वाहनं नन्दिः, पार्वत्याः सिंहवाहनम्। किन्तु शिवपार्वत्यौ सदा भगवतः ध्याने मग्नौ इति कारणात् नन्दि-सिंहयोर्मध्ये वैषम्यो नास्ति। शिवस्य ग्रीवायां सर्पो वर्तते। शिवकुमारस्य कुमारस्वामिनः वाहनं मयूरः। तर्ह्यपि सर्प - मयूरयोर्मध्ये वैषम्यो न दृश्यते। शिवस्य ग्रीवायां स्थितस्य सर्पस्य,

**सनकादिऋषयः वैकुण्ठे स्थितानां सुन्दराङ्गानां कार्यं दृष्ट्वा चकिताः। ताः सुन्दराङ्गनाः पद्मपुष्पान् हस्तेषु स्वीकृत्य शुचिं कुर्वत्यः आसन्। वास्तवे तावत् तत्र अशुचिः नास्त्येव। तथापि भगवत्सेवां प्राप्तुं ताः निमग्नाः, उत्सुकिताश्च।**

गणेशवाहनस्य मूषकस्य च मध्ये विरुद्धस्वभावः वर्तते चेदपि वैषम्यः न दृश्यते।

सनकादिऋषयः वैकुण्ठे स्थितानां सुन्दराङ्गानां कार्यं दृष्ट्वा चकिताः। ताः सुन्दराङ्गनाः पद्मपुष्पान् हस्तेषु स्वीकृत्य शुचिं कुर्वत्यः आसन्। वास्तवे तावत् तत्र अशुचिः नास्त्येव। तथापि भगवत्सेवां प्राप्तुं ताः निमग्नाः, उत्सुकिताश्च।

योगबलेन वैकुण्ठं प्राप्ताः सनकादयः तत्रस्थ शोभां वीक्ष्यमाणाः षड्द्वारान् अतिक्रम्य सप्तमद्वारं प्राप्तवन्तः। वैकुण्ठे सप्तद्वाराणि भवन्तीति अवगतविषयः। अत एव वैकुण्ठैकादशी दिने आलयेषु सप्तद्वाराणि प्रकल्प्य, तन्मार्गेण भगवतः दर्शनं कल्पितवन्तः। वैकुण्ठे ते स्वामिनः दर्शनेच्छुकाः आसन्। वयो विषये ते शिवादपि वरिष्ठाः। तथापि ते कामविकाररहिताः, बालकाः इव आसन्। परमानन्देन ते सप्तमद्वारस्य अतिक्रमणाय सन्नद्धाः। तदा तत्र स्थितौ द्वारपालकौ तान् निरोधितवन्तौ। तावेव जयविजयौ। तदा तेषां मनसि क्रोधः उद्भूतः। भगवद्दर्शनसमये निरोधकत्वेषु क्रोधः सामान्यः एव। वैकुण्ठात् निर्गमनाय जयविजयाभ्यां शापं दत्तवन्तः।

वैकुण्ठे अन्ते स्थितः श्रीमहाविष्णुः सेवकाभ्यां कृतं दोषं झटिति अवगम्य श्रीमहालक्ष्मी समेतः सन् द्वारस्य पार्श्वे समागतः। तदा सनकादिऋषयः बहु आनन्दं प्राप्य विनम्रभावेन नमस्कारान् समर्पितवन्तः।

सनकादिऋषयः तन्मयत्वेन स्थिताः। तदा श्रीमहाविष्णुः तेषां महिमाः कीर्त्य सेवकयोः पक्षतः क्षमां याचितवान्। तौ शीघ्रं वैकुण्ठं प्राप्तुं मार्गं प्रबोधयन्तु इति प्रार्थितवान्। श्रीमहाविष्णोः वचनानि सनकादिभ्यः दिग्भ्रान्तिं कारितानि। अनावश्येन ते शापं दत्तवन्तः इति चिन्तितवन्तः। तेषां भावान् देवदेवः अवगम्य सर्वं मम सङ्कल्पमेव इति, चिन्ता मास्तु इति, तौ शीघ्रमेव वैकुण्ठं प्राप्नुतः इति ज्ञापितवान्।

सनकादीनां शापप्रभावात् जयविजयौ वैकुण्ठात् पतितौ भूलोकं प्राप्तौ। तौ दितिगर्भे प्रविष्टवन्तौ। तत्र वैकुण्ठे सनकादयः श्रीमहाविष्णोः प्रदक्षिणा-नमस्कारान् कृतवन्तः। तेषां स्तुति-वरदांश्च स्वीकृत्य देवदेवः अन्ते प्रविष्टः। ते च ऋषयः सन्तुष्टाः सन् स्वनिजवासं प्राप्तवन्तः। जयविजयौ शापवशात् प्रथमजन्मनि हिरण्यकश्यप-हिरण्याक्षरूपेण, द्वितीयजन्मनि रावण-कुम्भकर्णरूपेण, तृतीयजन्मनि शिशुपाल-दन्तवक्ररूपेण देवदेवस्य हस्ते मरणं प्राप्य पुनः वैकुण्ठं प्राप्तवन्तौ। एवं रूपेण तौ त्रिजन्मसु भगवता सह युद्धं कुर्वन्तौ, तस्य हस्ते सद्गतिं प्राप्य शापात् विमुक्तौ, पुनः वैकुण्ठं प्राप्य द्वारपालकरूपेण प्रतिष्ठितौ।




**STATEMENT ABOUT OWNERSHIP AND OTHER PARTICULARS ABOUT**

**SAPTHAGIRI**

**(MONTHLY)**
**FORM IV**
*See Rule 8*

| | | |
|---|---|---|
| 1. | Place of Publication | : TIRUPATI |
| 2. | Periodicity of its Publication | : Monthly |
| 3. | Honorary Editor | : Sri Anil Kumar Singhal, I.A.S., Executive Officer, TTD |
| 4. | Printer's Name | : Sri R.V.Vijay Kumar, B.A. B.Ed. |
| | Whether citizen of India | : Yes |
| | Address | : Dy. E.O., (Publications and Press) T.T.D. Tirupati. |
| 5. | Editor & Publisher's Name | : Dr. K.Radha Ramana, M.A. M.Phil. Ph.D. |
| | Whether citizen of India | : Yes |
| | Address | : Chief Editor, . Sapthagiri T.T.D. Journal, Tirupati |
| 6. | Name and address of individuals who own the Newspaper and partners or shareholders holding more than one percent of the Total Capital | Board of Trustees represented by the Executive Officer on behalf of T.T.D., Tirupati |

*I, K.Radha Ramana hereby declare that the particulars given above are true to the best of my knowledge and belief.*

TIRUPATI
Date : 28-2-2019

**(Sd.) Dr.K.RADHA RAMANA**
*Signature of the Publisher*




## २०१९ जनवरि २७,२८ दिनाङ्कयोः तमिलनाडु कन्याकुमार्यां ति.ति.देवस्थानेन नूतनतया निर्मिते श्रीवेङ्कटेश्वरस्वामिनः आलये विग्रहप्रतिष्ठा-कलशस्थापन - महाकुम्भाभिषेकानां दृश्याणि।



यागकार्यक्रमः



पूर्णाहुतिः



पवित्रजलैः ति.ति.दे. अर्चकबृन्दः, ति.ति.दे. कार्यनिवहणाधिकारी



गर्भालयस्य महासम्प्रोक्षणम्



श्रीवेङ्कटेश्वरस्वामिनः आलयदृश्यम् - कन्याकुमारी



## जनवरि ३१, २०१९ दिनाङ्के आन्ध्रप्रदेशराज्य राजधान्यां अमरावत्यां श्रीवेङ्कटेश्वरस्वामिनः नूतनालयनिर्माणकार्यक्रमे ति.ति.दे.निर्वहणे भूकर्षण-बीजावापनदृश्यानि



वास्तुहोमादि कार्यक्रमः



नूतनतया श्रीस्वामिनः आलयनिर्माणसन्दर्भे
आन्ध्रप्रदेश मुख्यमन्त्रि वर्याय, प्रजाभ्यः च मङ्गलाशीः प्रदानं कुर्वन्
ति.ति.देवस्थानं श्री श्री पेद्दजीयर् वर्यः



महापूर्णाहुतिः



श्रीदेवी भूदेवी समेतः श्रीवेङ्कटेश्वरस्वामिने
नक्षत्रारार्तिक्य समर्पणम्



चतुर्वेदपारायणम्



भूकर्षणकार्यं निर्वहन् आन्ध्रप्रदेश मुख्यमन्त्रिः
मान्यश्री चन्द्रबाबुनायुडु वर्यः।

## जनवरि ३१, २०१९ दिनाङ्के आन्ध्रप्रदेशराज्य राजधान्यां अमरावत्यां श्रीवेङ्कटेश्वरस्वामिनः नूतनालयनिर्माणकार्यक्रमे ति.ति.दे.निर्वहणे भूकर्षण-बीजावापनदृश्याणि






श्रीस्वामिने स्नपनतिरुमञ्जनम्



श्रीस्वामिने कल्याणोत्सवः





आलयनिर्माण प्राणालिकाम् आलय प्रतिकृतीन् मुख्यमन्त्रिः मान्यश्रीनाराचन्द्रबाबुनायुडु वर्याय विवृण्वन् ति.ति.दे.कार्यनिर्वहणाधिकारी श्री अनिलकुमार् सिङ्घाल्,ऐ.ए.एस्.,



मुख्यमन्त्रिवर्यः मान्यश्री चन्द्रबाबुनायुडु वर्येण बीजावापन दृश्यम्



अशेषसंख्यायां भागगृहीतारः भक्ताः








पुरा ति.ति.देवस्थानं पेद्दजीयर् श्रीश्रीश्री शठगोपरामानुजवर्याणाम्
आध्वर्यवे तिरुपति श्रीगोविन्दराजस्वामिनः मूलमूर्तये कौशेयवस्त्रान्
मौक्तिककवचं: शङ्खचक्रे, कीरीटान् च ति.ति.दे कार्यनिर्वहणाधिकारिणे समर्प्यमाणं दृश्यम्





## तिरुमलायां भूत रामकृष्णतीर्थोत्सवस्य कार्यक्रमः





जनवरि २६ दिनाङ्के ७० तमे गणतन्त्रदिनोत्सवसन्दर्भे
ति.ति.दे. परिपालनाभवनस्य क्रीडाङ्गणे जातीयपताकाविष्कारं कृत्वा,
सञ्चलनवन्दनं स्वीकुर्वन् ति.ति.दे.
कार्यनिर्वहणाधिकारी श्री अनिलकुमार् सिङ्घाल्, ऐ.ए.एस्.,
कार्यक्रमेऽस्मिन् ति.ति.दे.,
संयुक्तकार्यनिर्वहणाधिकारी (तिरुपति) श्री पोलभास्कर्, ऐ.ए.एस्
मुख्यनिघा, रक्षणाधिकारी श्रीगोपीनाथ जेट्टि, ऐ.पी.एस्.,
उन्नताधिकारिणः, उद्योगिनश्च भागं गृहीतवन्तः।



हरिततोरणम्

# सप्तगिरिपरिसरप्रान्तेषु महाशिवरात्रिमहोत्सवः

तेलुगु मूलम् - जे.बालसुब्रह्मण्यम्
संस्कृतानुवादः - श्री डि. चैतन्यकृष्णः

श्लो।। वा‘सु’देव इति वा’म‘देव इ -
त्यस्ति कल्पक महीरुह द्वयं।
यद्यहीह ‘सुम’ भेदसम्भवः,
नास्त्यथापि फलभेदसम्भवः।।
- अप्पय्यदीक्षितः



सप्तलोकेषु ऊपर्यधस्थितेषु सर्वेऽपि अद्भुतसुन्दरयुतं भूमिं वीक्ष्य असूयां प्राप्नुवन्ति। तस्य कारणं किमित्युक्तौ - रमणीय-महिमान्वितकल्पवृक्षाणाम् अत्र भूलोके भवनमेव।

प्रथमकल्पवृक्षस्य नाम वा‘सु’देव इति, द्वितीयकल्पवृक्षस्यनाम वा‘म’देव इति। उभावपि दिव्यवृक्षौ भक्तेभ्यः वरं दातुं सदा सन्निद्धौ एव भवतः। परस्परं प्रतियोगिताकांक्षिणौ स्तः। उभयोः वृक्षयोर्मध्ये ‘सु’ , ‘म’ भेदौ परित्यज्य अन्यत्सर्वमपि समानमेव। अखण्डभारतभूमौ उभावपि वृक्षौ भक्तेभ्यः निरन्तरं इच्छापूर्तिं कारयतः। मुख्यतया सप्तगिरिपरिसरप्रान्तेषु।

वासुदेवस्य कल्याणे वामदेवः ज्येष्ठतया, वामदेवस्य कल्याणे वासुदेवः ज्येष्ठतया सर्वत्र दृग्गोचरः भवति।

**शेषाचले महाशिवरात्रिः -**

शेषाचलोपरि स्थितः वासुदेवकल्पवृक्षः नागाभरणयुतः श्रीनिवासः वर्तते चेत् क्षेत्रपालकरूपेण अस्मिन् क्षेत्रे वामदेवकल्पवृक्षः वर्तते। स एव रुद्रः इति नाम्ना प्रसिद्धः। निरन्तरं श्रीस्वामिनः आलयं रक्षयन् ‘रुद्रः’ प्रतिदिनम् आलये पूजादिकं स्वीकरोति। मुख्यतया महाशिवरात्रि पर्वदिने एकादशरुद्र-नमकचमकादि वेदमन्त्रैः अभिषेकं स्वीकरोति। अत्र न कोपि सन्देहः।

गोगर्भतीर्थम्



श्रीकपिलतीर्थम्



महाशिवरात्रिपर्वदिने प्रातः ९.०० वादने तिरुमल श्रीवेङ्कटेश्वरस्वामिनः आलयात् श्रीस्वामिनः अर्चकाः, आलयाधिकारिणश्च मङ्गलवाद्यैः सह गोगर्भतीर्थे (पाण्डवतीर्थे) स्थितस्य क्षेत्रपालकस्य रुद्रस्य एकादशरुद्र-नमकचमकमन्त्रैः रुद्राभिषेकाः, निवेदनानि च निर्वहन्ति। श्रीवेङ्कटेशसन्निधौ महाशिवरात्र्युत्सवे असंख्याकाः भक्ताः भागं गृहीत्वा तरन्ति।

**शेषाचलमूले महाशिवरात्रिः -**

तिरुमलेशः 'उपत्यका प्रदेशस्थ शिवध्यातमूर्तये नमः' इति नाम्ना अर्चितो भवति। पर्वतस्याधः स्थित्वा शिवेन ध्यातः इति अस्य अर्थः। तिरुमलगिरेः अधः श्रीकपिलेश्वरेन स्तुत्यः इत्यर्थः।

पाताललोके कपिलमहर्षिणा पूजितलिङ्गम् वर्धमानं वेङ्काचलपर्वतमूले स्वयम्भूक्षेत्रतया श्रीकामाक्षी श्रीकपिलेश्वर गुहालयरूपेण विराजते। शिवलिङ्गेन साकं पाताले स्थिता भोगवती गङ्गा अपि उपर्यागता। सा एव 'कपिलतीर्थ' रूपेण प्रख्याता। वेङ्कटाचलक्षेत्रात् निर्गत्य नानाविध तीर्थजलसम्मेलनतया सकलपापहारिणी रूपेण प्रसिद्धिमप्राप्नोत्।

तिरुमलां प्राप्ताः भक्ताः सर्वप्रथमं कपिलेश्वरशिवलिङ्ग दर्शनं कुर्युः इति क्षेत्रनियमोऽपि वर्तते। तिरुमलतिरुपतिदेवस्थानस्य पक्षतः आलयेऽस्मिन् नित्यम् अर्चनाऽभिषेक-नैवेद्यानि समर्प्यन्ते। भक्तैः सदा रमणीयतया प्रपूर्तेऽस्मिन् क्षेत्रे महाशिवरात्रिदिने प्रत्येकतया विशेषरीत्या ब्रह्मोत्सवः समाचर्यते। महाशिवरात्रि रात्रौ भूयमानः रजतनन्दीश्वरवैभवम्, तदनन्तरदिने कामाक्षी-कपिलेश्वरयोः कल्याणोत्सववैभवः च वर्णनातीतः।

**दक्षिणकैलासे ''महाशिवरात्रिः'' -**

**तस्य दक्षिणकैलासनामकं स्थानमुत्तमम्।**
**'कालहस्ती'ति विख्यातं शिरोदेशः प्रकीर्तितः।।**

**- वेङ्कटाचलमाहात्म्यम् - ब्रह्माण्डपुराणम्**

दक्षिणकैलासरूपेण प्रसिद्धः 'श्रीकालहस्तिः' क्षेत्रमपि शेषाचलपर्वतस्य शिरोभागप्रान्ते विराजते। पञ्चभूतलिङ्गेषु 'वायुलिङ्ग' रूपेण अत्रस्थ ईश्वरः आख्यातः। श्री (लूना), कालः (सर्पः), हस्तिः (गजः) प्रभृति जीवराशिभिः अर्चनां गृहीत्वा तेभ्यः मुक्तिं प्रसादितवानिति कारणतः एव 'श्रीकालहस्तीश्वरः' इति नाम सार्थकमभवत्। अत्र पार्वतीदेवी 'ज्ञानप्रसूनाम्बिका' रूपेण भक्तेभ्यः ज्ञानम्, इष्टार्थांश्च प्रसादयति। पुरा 'तिन्नड' इति किरातभक्तः निरन्तरम् अञ्जलिजलेनाभिषिच्य, आखेटात् प्राप्तं मांसं शिवाय समर्प्यमाणः आसीत्। तं भक्तं परीक्ष्य नेत्रे स्वीकृत्य किरातभक्ताय मोक्षं प्रसादितवान्। स एव भक्तः 'भक्तकन्नप्पा' नाम्ना विख्यातः।

पार्वतीदेव्याः केशाः परिमलेन व्याप्ताः इति परमेश्वर वादमेव 'नत्कीरः' इति कविः आक्षेपं कृतवान्। शिवस्य शापप्रभावात् नत्कीरः कुष्ठरोगं प्राप्तवान्। स्वीयाज्ञानं क्षमयतु इति प्रार्थिते सति शिवः नत्कीरं-कैलासं गच्छतु, तदा शापविमुक्तिः भवतीति उक्तवान्। सुब्रह्मण्याज्ञया नत्कीरः कैलाससमं श्रीकालहस्तीक्षेत्रं दर्शनं कृत्वा शापविमुक्तिं प्राप्तवान्।

निरन्तरसेवाभिः, राहुकेतुदोषाणां पूजाभिः, कल्याणोत्सवैः, भक्तैश्च श्रीकालहस्तीक्षेत्रं विराजते। मुख्यतया महाशिवरात्र्युत्सवे, तिरुमल श्रीवेङ्कटेश्वरस्वामि देवस्थान जनाः ज्ञानुप्रसूनाम्बिका-श्रीकालहस्तीश्वरयोः वस्त्रसमर्पणं कुर्वन्ति। स्वर्णमुखीनदीतीरे दक्षिणकाशी रूपेण विराजमानं श्रीकालहस्तीश्वरक्षेत्रम् अत्र श्रीवेङ्कटाचलक्षेत्रे दृश्यते सति तिरुमलाम् अपि प्राचीनक्षेत्रमिति वक्तुं शक्नुमः।

श्रीकालहस्तिः



श्रीशैलम्



**भूकैलासे 'महाशिवरात्रिः' -**

**'प्रसिद्धः पुच्छदेशोऽयं 'श्रीशैल' इति विश्रुतः।**
**श्रीशैलस्य प्रदेशेऽस्मिन् नीलकण्ठाश्रमे शुभे।।**

- वेङ्कटाचलमाहात्म्यम्, ब्रह्माण्डपुराणम्

सर्पाकारस्य शेषाचलपर्वतस्य शिरोभागे श्रीवेङ्कटेश्वरः, पुच्छभागे श्रीशैले मल्लिकार्जुनश्च विराजतः इति प्रशस्तिः।

'चन्द्रमती' इति भक्तायाः इच्छया तां माला रूपेण धृत्वा श्रीगिरिमल्लिकार्जुनः इति नाम्ना प्रख्यातः। एवमेव पार्वतीदेवी अपि कैलासात् शिवस्यान्वेषणं कुर्वती भूलोके अरुणासुरराक्षसं भ्रमररूपे संहारं कृत्वा भ्रामरीशक्तिपीठतया श्रीमल्लिकार्जुनस्य पार्श्वे आगतवती।

जगद्गुरुः श्रीशङ्कराचार्यः अस्मिन् क्षेत्रे 'शिवानन्दलहरी' स्तोत्रम् एवं नानारचनाः कृताः इति प्रसिद्धिः।

अस्मिन् श्रीशैलक्षेत्रे निरन्तरम् श्रीभ्रमराम्बिकामल्लिकार्जुनयोः नित्यसेवाकैङ्कर्याः, वारोत्सवाः, शरन्नवरात्र्युत्सवाः भवन्ति। मुख्यतया 'महाशिवरात्रि' पर्वदिने उत्सवः समाचर्यते। अस्मिन् दिने श्रीमहालिङ्गोद्भवकाले महान्यासपूर्वकरुद्राभिषेकं वैभवेन आचरन्ति। अर्धरात्रिवेलायां गर्भालयशिखरस्य सर्वतः 'पागा' इत्युच्यमानं वस्त्रं दिगम्बरपद्मशाली आवर्तयति। तिरुमल श्रीवेङ्कटेश्वरः महाशिवरात्रिपर्वदिने श्रीभ्रमराम्बासमेत-श्रीमल्लिकार्जुनयोः कृते सम्प्रदायानुसारं वस्त्रान् समर्पयति।

**'नन्दिमण्डले' महाशिवरात्रिः -**

श्रीशैलक्षेत्रस्य पार्श्वे महानन्दिप्रदेशः वर्तते। पुरा 'नन्दि' इत्युच्यमानः भक्तः शिवं सम्पूज्य अस्य प्रान्तस्य नन्दिमण्डलतया नाम भवतु इति, शिवः स्वीय नाम्ना 'नन्दीश्वर' इति सम्बोधयतु इति वरं प्राप्तवान्। अस्मिन् स्थले शिवः 'नन्दीश्वर' नाम्ना, पार्वतीदेवी 'कामेश्वरी' नाम्ना च व्यवह्रियेते। महानन्दिपरिसरप्रान्तस्य चतुर्षु दिक्षु नवनन्दयः वर्तन्ते इति कारणात् 'नवनन्दि' क्षेत्रतया आख्यायते। अस्मिन् क्षेत्रे नित्योत्सवैः साकं 'महाशिवरात्रि' सन्दर्भे सहस्राधिकाः भक्ताः भागं गृह्णन्ति।

**'नारायणवरे' महाशिवरात्रिः -** श्रीपद्मावतीश्रीनिवासयोः परिणयस्थानमेव 'नारायणवरम्'। प्रदेशोऽयं एकदा आकाशराज्ञः राजधानी आसीत्। पञ्चसहस्रवर्षेभ्यः प्राक् त्रिकोटिदेवताभिः साकं श्रीनिवासः आकाशराज्ञः पुत्रिकया पद्मावत्या सह परिणीतः दिव्यप्रदेशः नारायणवरम्।

कल्याणदम्पती श्रीपद्मावतीश्रीनिवासौ हरिद्रावस्त्रान् धृत्वैव श्रीशक्तिविनायकस्वामि आलयं, श्रीचम्पकवल्ली समेत श्रीपराशरेश्वरालयं, श्रीमरकताम्बिका समेत श्रीअगस्त्येश्वरालयं, श्री कल्याणवीरभद्रस्वामिनः आलयं, श्रीअवनाक्षम्मालयं च दर्शितवन्ताविति प्रसिद्धिः। एते प्रदेशाः अधुनापि नानाविधैः उत्सवैः शोभन्ते।

नारायणवरस्थ श्रीकल्याणवेङ्कटेश्वरस्य आलयेन साकम् उपर्युक्तालयाः सर्वेऽपि ति.ति.देवस्थानस्य पर्यवेक्षणे शोभन्ते। मुख्यतया 'महाशिवरात्रि' पर्वदिने तेषु मन्दिरेषु महान्यासरुद्राभिषेकाः, अर्चनाः, ब्रह्मोत्सवश्च श्रीनिवासस्य पर्यवेक्षणे सम्पाद्यन्ते।

**तोण्डवाडाक्षेत्रे महाशिवरात्रिः -**

तिरुमलक्षेत्रात् किञ्चिद्दूरे उत्तरदिशि सुवर्णमुखी नदीतीरे श्रीअगस्त्येश्वरस्वामिक्षेत्रं वर्तते। एनमेव 'रुद्रपादालमुक्कोटिक्षेत्रम्' इत्यपि नाम्ना व्यवहरन्ति। अगस्त्यमहर्षिणा प्रतिष्ठितस्य 'महाशिवलिङ्गस्य' पार्श्वे पार्वतीमाता 'आनन्दवल्ली' इति नाम्ना प्रतिष्ठिता।

नन्दिमण्डलम्



नारायणवरम्





नास्त्युद्यम समोबन्धुः कृत्वा यं नावसीदति







नूतनदम्पती श्रीपद्मावती-श्रीनिवासौ आदिवराहक्षेत्ररूपं तिरुमलां प्राप्य तोण्डवाडाक्षेत्रे अगस्त्यमहर्षिं दर्शितवन्तौ। लोपामुद्रा-अगस्त्यमहर्षिः च तयोः आतिथ्यं समर्पयन्तौ- 'स्वामिन्! श्रीनिवास! नूतनदम्पती षण्मासपर्यन्तं क्षेत्रयात्रां न कुरुतः। तावत्पर्यन्तं आवयोः आतिथ्यं स्वीकृत्य ततः वराहक्षेत्रं प्राप्नुवतः इति ज्ञप्तिं कारितवन्तौ। तस्यैव प्रतीकरूपेण श्रीकल्याणवेङ्कटेश्वरालयः श्रीनिवासमङ्गापुरे विराजितः।

आन्ध्रप्रदेशदेवादायशाखायाः आध्वर्यवे स्थिते आलयेऽस्मिन् नित्याभिषेकार्चनादयः, 'महाशिवरात्रि' दिने वैभवेन उत्सवश्च भवन्ति।

**'तलकोन' क्षेत्रे महाशिवरात्रिः -**

एनानतिरिच्य सप्तगिरिपरिसरप्रान्तेषु वेङ्कटाद्रेः पृष्टभागे प्रसिद्धः प्रदेशः 'तलकोन' इति वर्तते। निरन्तर जलपातेन, रमणीयशोभाभिः रञ्जिते अस्मिन् प्रदेशे श्रीसिद्धेश्वरस्वामिनः महाशिवलिङ्गेन साकं 'सिद्धेश्वरी' माता च अनुनित्यं भक्तैः सम्पूज्येते।

एवमेव श्रीशुकमहर्षिणः आश्रमप्रान्तात् तिरुचानूरु श्रीपद्मावतीमातुः दिव्यक्षेत्रात् किञ्चिद्दूरे 'योगिमल्लवरम्' इति क्षेत्रं वर्तते। श्रीशुकस्य पितामहः पराशरमहर्षि प्रतिष्ठिते योगिमल्लवरे 'श्रीपराशरेश्वरस्वामी' निरन्तराभिषेकार्चनादिभिः सम्पूज्यते। एवमेव 'महाशिवरात्रि' पर्वदिने वैभवेन महान्यासपूर्वकरुद्राभिषेकैः क्षेत्रमिदं भक्तैः रञ्जितः वर्तते।

एवं सप्तगिरिपरिसरप्रान्तेषु विराजितेषु अनेकानेकेषु शैवक्षेत्रेषु महाशिवरात्रिपर्वदिनेषु 'ॐ नमश्शिवाय हरहर महादेव!' इति निनादेन आलयाः परिपूर्ताः भवन्ति।

एतदेव न, उभावपि एक एव इति वक्तुं इतोपि आख्यानाः वर्तन्ते। एकः वासुदेवः, एकः वामदेवः। एकः मा रमणः! अपरः उमारमणः! एकः शेषशायी चेत् अपरः शेषधारकः। एकः त्रिपुरासुरसंहारकः चेत् अपरः मुरासुरं संहर्ता। उभयोर्मध्ये एकः बाणासुरस्य शत्रुः, अन्यः असमबाणस्य मन्मथस्य शत्रुः। एवं रूपेण दिव्यलक्षणैर्युतौ वासुदेव-वामदेवौ च सम्पूज्य एवं प्रकारेण कीर्तयामः -

मा रमणमुमारमणं
फणधरतल्पं फणाधराकल्पं।
पुरमथनं मुरमथनं
वन्दे बाणारिमिसमबाणारिम्।।

- अप्पय्यदीक्षितः

- ॐ हरये नमश्शिवाय -



भगवद्गीता-युवा

# बुद्धिनाशात्प्रणश्यति

तेलुगु मूलम्- डा॥ वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादः - श्री किशनलाल जोशी



**म**नुष्यः स्वबुद्ध्या यदि मानवानां कल्याणाय कार्यान् करोति तर्हि सः इतिहासपुटेषु शाश्वतत्वं सम्पादयति। महापुरुषः इति प्रख्यातो भवति। यदि अस्य विपरीततया आचरति अर्थात् लोकविनाशकारी कार्यान् करोति तर्हि सः पापी इति, दुर्जनः इति सम्बोधितो भवति। अर्थात् मनुष्यस्य कीर्त्यर्थं, तिरस्कारार्थं च बुद्धिः एव प्रधाना।

वयं यानि विवराणि ज्ञानेन्द्रियाणां माध्यमेन ज्ञास्यामः तान् समाचाराः इति व्यवहरामः। यां मस्तिष्के स्थापयामः सा एव विद्या। विचक्षणाज्ञानेन कुत्र किं कर्तव्यमिति वयम् आलोचयामः। एतेषां कार्यस्थानं वर्तते विज्ञानमयकोशः। सा एव बुद्धिः इत्याचक्षते। अनया एव बुद्ध्या राकेट् प्रभृतीन् च अन्तरिक्षे वैज्ञानिकाः प्रेषयन्ति। तीव्रवादिनः एनाम् उपयुज्य प्रपञ्चमानवेभ्यः भीतिं प्रापयन्ति। मनुष्यस्य अस्तित्वे देहः, मनः, बुद्धिः, आत्मा च इत्येतेषु चतुर्षु आत्मा समुन्नते स्थाने वर्तते। अस्याधः बुद्धिः वर्तते, तस्याः अधः स्थाने मनः, तस्य च अधः देहः। तृतीयस्थाने स्थिता बुद्धिः यदा आत्मना सहैकत्वं प्राप्नोति तदा लोकहितकार्येषु स्थिरो भवति। यदि बुद्धिः तस्याधस्थ मनसा सहैकत्वं प्राप्नोति, तदा लोकविनाशकरकार्येषु, पतनकार्येषु च रता भवति। बुद्धिनाशात् सर्वस्व नाशः भवतीति अवगन्तव्यम्। अयं बुद्धिनाशः कुतः प्रारम्भो भवतीति विषये गीताचार्यः एवं वर्णयति-

''ध्यायतो विषयान् पुंसः, सङ्गस्तेषूपजायते।
सङ्गात् सञ्जायते कामः, कामात्क्रोधोऽभिजायते॥''
''क्रोधाद्भवति सम्मोहः, सम्मोहात् स्मृतिविभ्रमः।
स्मृति भ्रंशात् बुद्धिनाशो, बुद्धिनाशात् प्रणश्यति॥''

इन्द्रियभोगविषयेषु यदा अधिकचिन्तनं जायते तदा मनुष्यस्य तेषु अनुरक्तिः वर्धते। ततः कामः, कामात् क्रोधः उद्भवतः। क्रोधात् मोहः, मोहात् स्मृतिभ्रंशः भवतः। यदा स्मृतिभ्रंशः भवति तदा बुद्धिः ह्रासो भूत्वा सः मनुष्यः अधोगतिं प्राप्य विनष्टो भवति। (भगवद्गीता - २/६२,६३)

बुद्धिनाशविषये एवं स्पष्टं विवरणं कुत्रापि न दृश्यते एव। अधोगतिं प्राप्य कारावासे स्थितान्, रोगयुक्तान्, संघात् बहिर्गतान् च यदि पश्यामश्चेत् अयं विषयः सुस्पष्टो भवति। गीतायामुक्तदिशा बुद्धेः विनाशकारी परिस्थितयः लोके वयं पश्यामः। प्रेमोन्मादकारणात् युवकः युवत्याः हत्याकरणं, स्फोटकादीनां क्षेपणादीन् अस्य उदाहरणतया ज्ञातुं शक्नुमः। युवकः युवतीं वीक्ष्य आकर्षितो भवति। ततः तस्याः वीक्षणक्रियया अनुरक्तिर्भवति। ततः कामः उत्पद्यते। तया अनङ्गीकारे तस्याः ऊपरि क्रोधः सम्भवति। क्रोधात् मोहः उत्पद्य अज्ञाने सः गच्छति। तत्कारणात् स्मृतिभ्रमः भवति। अर्थात् तस्य भविष्यत् कथं सम्भविष्यतीति सः न चिन्तयति। बन्धुवर्गान्, ज्येष्ठांश्च विस्मृत्य विचक्षणाज्ञानरहितो भवति। बुद्धिनाशस्य अयमेव स्वरूपः। तेन युवत्याः हत्याकरणादिकं विचिन्त्य घोरं पापं कृत्वा कारावासे गच्छति। लोकैः तिरस्कृतः सन् विनश्यति। एवं रीत्या आकर्षणात् प्रारभ्य पतनपर्यन्तं क्रमः वर्तते। अतः एव गीताचार्यः ''बुद्धिनाशात् प्रणश्यति'' इत्युक्तवान्। अतः युवजनाः आकर्षणानामुपरि न गत्वा अध्ययन-उन्नतलक्ष्यानामुपरि एव स्व मनांसि लग्नं कृत्वा विजयशिखरं प्राप्तुं प्रयत्नरताः भवेयुः।





सर्वसिद्धिकारकं

# तुम्बुरुतीर्थम्

- डा.एम्.जि.नन्दनराव्

तिरुमलक्षेत्रे नानाविधानि तीर्थानि विशिष्टानि सन्तीति वयं जानीमः। तेषु तुम्बुरुतीर्थमेकम्। भगवतः सन्निधानात् प्रायः १५ कि.मी.दूरे तीर्थमिदं विराजते।

२०.०३.२०१९ तुम्बुरुतीर्थोत्सवस्य सन्दर्भे ....

पुरा एकदा कश्चन तुम्बुरुः अपूर्वां काञ्चन वीणां वादयन् नारदेन दृष्टः। ततः नारदः चकितो भूत्वा एतां वीणां कुतः प्राप्तवान्? इति पृष्टवान्। तदा तुम्बुरुः - ''कश्चन राजा मया स्तुतः। तेन सन्तुष्टः सः राजा मह्यम् एतां वीणां दत्तवान्'' इति अवोचत्। तदा नारदः ''देवदेवस्य पुरुषोत्तमस्य कीर्तनं परित्यज्य मानवमात्रस्य कीर्तनं विधाय भवान् भगवद्दत्तप्रतिभायाः दुरुपयोगं कृतवान्। अतः भवतः आकाशगमनसामर्थ्यं नश्यतु'' इति शप्तवान्। आकाशगमनाशक्तः तुम्बुरुः पूर्वं कृतानां विष्णुस्तुतीनां पुण्यवशात् वेङ्कटाचलस्य घोणतीर्थस्य समीपे पतितः। तस्य स्थानस्य महिमां ज्ञात्वा सः श्रीवेङ्कश्वरमन्त्रजपम् अकरोत्। अत्रत्य पवित्रजलेषु स्नानमाचरन् कठिननियमैः एकवर्षकालं तपः अकरोत्। तपसा सम्प्रीतः भक्तवत्सलः श्रीवेङ्कटेश फाल्गुणमासस्य पौर्णिमायाम् अनन्तगरुडादिभिः समागत्य दर्शनमददात्। ब्रह्माद्याः देवाः अपि प्रत्यक्षतां गतस्य श्रीवेङ्कटेशस्य दर्शनं प्राप्य मोदं प्राप्तवन्तः। तदा तुम्बुरुः - 'स्वस्य नाम्ना इदं तीर्थं भवतु' इति वरम् अयाचत्। भगवान् 'तथास्तु' इत्यन्वमोदयत्। भगवद्वचनानुसारेण तत् तीर्थं तुम्बुरुतीर्थनाम्ना प्रसिद्धिमप्राप्नोत्। यस्मिन् दिने श्रीवेङ्कटेशः तुम्बुरवे दर्शनमयच्छत् तस्मिन् दिने अत्र तीर्थोत्सवं निर्वहन्ति।

## स्कन्दपुराणे घोणतीर्थमाहात्म्यम् -

पूर्वं तुम्बुरुनामकः कश्चन गन्धर्वः आसीत्। सः माघमासे विष्णुपूजनं कृत्वा कृतार्थः भवितुम् ऐच्छत्। अतः माघत्रये स्नात्वा विष्ण्वाराधनं सङ्कल्प्य पत्न्यै अपि तथा पूजां कर्तुम् अवोचत्। माघमासः शैत्यकालः। शैत्यात् भीता तस्य पत्नी तथा कर्तुं तिरस्कृतवती। अप्रियवादिन्याः पत्न्याः वचनैः कुपितः तुम्बुरुः तां शप्तवान्। शापवशात् भीता सा शापविमुक्तेः उपायं प्रसादयतु इति प्रार्थनामकरोत्। तदा तुम्बुरुः - ''यदा अगस्त्यमहर्षिः घोणतीर्थे स्नात्वा तत्रत्य अश्वत्थतीर्थस्य समीपे विद्यमानस्य अश्वत्थवृक्षस्य समीपे उपविश्य स्वशिष्येभ्यः घोणतीर्थमाहात्म्यम् उपदिशति तदा भवत्यै शापविमुक्तिः'' इति अवोचत्।

तुम्बुरोः भार्या शापवशात् घोणतीर्थस्य समीपे विद्यमाने अश्वत्थवृक्षस्य बिले मण्डूकरूपेण स्थितवती।

बहुकालनिरीक्षणात् परम् अगस्त्यमहामुनिः शिष्यबृन्देन सह समागतः श्रीवेङ्कटनायकस्य दिव्यदर्शनं प्राप्य निवर्तमानः घोणतीर्थे स्नात्वा अश्वत्थवृक्षस्याधः उपविष्य शिष्येभ्यः घोणतीर्थस्य वैभवम् अवर्णयत्। महर्षेः वचनानि श्रुत्वा गन्धर्वस्त्री शापविमुक्ता अभवत्। मण्डूकशरीरं परित्यज्य गन्धर्वदेहम् अवाप्नोत्। अगस्त्य- महर्षये स्ववृत्तान्तं न्यवेदयत्। तस्याः वृत्तान्तं श्रुत्वा तस्यै पातिव्रत्यधर्मान् उपदिश्य आशीर्भिः अनुगृहीतवान्। ततः परं सा पतिसन्निधिं प्राप्य पत्यनुकूलाचारवती दैवभक्तिसमन्विता च अभवत्।

**महापातकेभ्यः विमुक्तिः -** पूर्वं सर्वाबद्धनामकः कश्चन ब्राह्मणः आसीत्। सः आचारहीनः, दुराचारी, नास्तिकः, शिष्टदूषकश्च आसीत्। तथापि दक्षिणालोभेन यागशालासु प्रविशति स्म। तस्य दुराचारान् जानन्तः याज्ञिकाः तं यज्ञेभ्यः निवारयन्ति स्म। तदा कुपितः सः ''किं भवन्तः सर्वे वसिष्ठाः'' इति पृच्छति। वसिष्ठः पतितस्य मुखात् स्वनामग्रहणं श्रुत्वा तस्मिन् दयमानः तस्य समुद्धरणे सङ्कल्पमकरोत्।

वसिष्ठः ब्रह्मसभां गत्वा ब्रह्माणं नमस्कृत्य सर्वाबद्धस्य पापक्षयार्थं तथा राजगुरोः स्वस्य च पापमोचकम् उपायम् अपृच्छत्।

तदा ब्रह्मा विचिन्त्य श्रीवेङ्कटाचलस्य घोणतीर्थे मीनमासस्य पूर्णिमायां स्नात्वा सर्वपापविमुक्ताः भवन्ति। अस्मिन् तीर्थे प्रायश्चित्तरहितानामपि पापानां निवृत्तिः भविष्यतीति अवोचत्।

ब्रह्मलोकात् प्रत्यागतः वसिष्ठः ब्रह्मणः वचनमनुसृत्य सर्वाबद्धेन सह घोणतीर्थं गत्वा पर्वकाले स्नातवान्। स्नानमात्रेण द्वावपि निष्कल्मषौ अभूताम्। तदा द्वावपि श्रीवेङ्कटेश्वरं स्तुतवन्तौ। तयोः स्तुत्या प्रीतः परमात्मा दिव्यतेजसा आविर्भूय वसिष्ठस्य कारुण्यं प्रशंस्य, सर्वाबद्धं सर्वसिद्धिसंपन्नमकरोत्।



# तरिगोण्डवेङ्गमाम्बा



तरिगोण्ड वेङ्गमाम्बा श्रीवेङ्कटेश्वरस्य भक्तेषु सुप्रसिद्धा।सा महायोगिनी तपस्विनी च आसीत्। आन्ध्रप्रदेशस्य चित्तूरुजनपदान्तर्गते वायल्पाडुसमीपस्थे तरिगोण्डग्रामे तस्याः जन्म अभवत्। तरिगोण्डग्रामं परित्यज्य तिरुमलक्षेत्रं गत्वा अवशिष्टं सम्पूर्ण - जीवनकालं तिरुमलक्षेत्रे यापितवती। तिरुमलक्षेत्रस्य प्रधानालयसमीपे तस्याः निवासोऽपि आसीत्। किन्तु कैश्चित् कारणैः खिन्नमनस्का भूत्वा ततः अदृश्या अभवत्। सा तुम्बुरुतीर्थे स्थित्वा योगसाधनां कृतवती। तुम्बुरुतीर्थस्य वैभवं प्रशंस्य गीतानि लिखितवती। तुम्बुरुतीर्थस्य समीपस्थानेषु विद्यमानानां वनवासिनां साङ्गत्येन तेषां भाषां व्यवहारञ्च ज्ञात्वा ''चेञ्चुनाटकम्'' इति यक्षगाननाटकं विलिख्य तस्मिन् श्रीवेङ्कटेश्वरस्य वैभवम् आविष्कृत्य प्रसिद्धा अभवत्।



आयुर्वेदः



# आरोग्यदिव्यामृतं त्रिफलाचूर्णम्

तेलुगु मूलम्- डा।।चिट्टिभोट्ल मधुसूदनशर्मा
संस्कृतानुवादः - श्री डि.हरिकृष्णः

त्रिफला इत्युक्ते फलत्रयमित्यर्थः। आमलकी, हरीतकी बिभीतकी फलान् त्रिफला इति वदन्ति। शुष्कान् बीजरहितान् एनान् चूर्णीकृत्वा समानमात्रया सम्मेलनेन त्रिफलाचूर्णस्य निर्माणं भवति। अस्य चूर्णस्य उपयोगेन वयं नानाविधरोगेभ्यः सकाशात् रक्षणं प्राप्नुमः।

**रक्तशुद्ध्यै** - १५० ग्रा. त्रिफलाचूर्णे ५० ग्रा. ऐन्दवीचूर्णं सम्मेल्य प्रातः, रात्रौ च एकैकस्मिन् काले २,३ ग्रा. चूर्णं मधुना सह सेवनेन रक्तशुद्धिर्भवति। एवमेव त्रिफलाचूर्णं दध्ना सह सम्मेल्य कण्डूयनादि प्रदेशेषु लेपनेन नानाविध चर्मव्याधयः नश्यन्ति।

**व्याधिनिरोधकशक्त्यै** - ६० ग्रा. त्रिफलाचूर्णं, ६० ग्रा. मिश्रीचूर्णं, ६० ग्रा. शुद्धघृतं, १२० ग्रा. शुद्धमधुं सम्यक्तया सम्मेल्य, कूप्यां स्थापयेत्। एनमौषधं प्रातः, सायं एकैकस्मिन् काले एकचमसपरिमाणं प्रातः, सायं एकैकस्मिन् काले स्वीकुर्यात्। ततः अनुपानतया जलम् अथवा दुग्धस्य सेवनेन व्याधिनिरोधकशक्तिः वर्धितो भूत्वा वारं-वारं रोगसमस्याः निकटे न आयान्ति।

**गण्डानां कृते** - द्विभागपरिमिते त्रिफलाचूर्णे एकभागप्रमाणं हरिद्राचूर्णं सम्मेल्य दिने एकवारं किञ्चित् चूर्णे जलं मिश्रयित्वा मुखोपरि लेपनं कृत्वा एकघण्टानन्तरं जलेन मुखं क्षालयेत्। अनेन शीघ्रमेव गण्डानां निवारणं भवति।

**मूलव्याधिः, मलबद्धसमस्यासु** - १५० ग्रा. त्रिफलाचूर्णे ५० ग्रा.सुनामुखीचूर्णं सम्मेल्य प्रतिदिनं रात्रौ शयनात्पूर्वं समस्या तीव्रतां वीक्ष्य अर्धचमसप्रमाणात् एकचमसप्रमाणं यावत् मधुना अथवा जलेन सह सेवनेन सत्वरलाभो दृश्यते।

**अधिक भारः, स्थूलकायस्य न्यूनार्थम्**- रात्रौ शयनात्पूर्वं २०० मि.ली.जले ५ ग्रा. त्रिफलाचूर्णं, लघु अद्रकखण्डं कुण्टनं कृत्वा प्रातः पर्यन्तं स्थापयेत्। तं १०० मि.ली. जलाशेषपर्यन्तं उष्णं कृत्वा, निष्कास्य, अर्धभागनिम्बफलरसं सम्मेल्य सेवनेन शरीरे विविधभागेषु सञ्चितः व्यर्थमांसादयः न्यूनीभवन्ति।

अस्य औषधस्य सेवनेन अस्मत् शरीरेषु स्थिताः हानिकारकांशाः निर्वीर्याः भवन्ति।

**श्वेतकेशानां कृष्णवर्णतायै** - एकस्मिन् लोहपात्रे १ कि.तिलतैलं, १२५ ग्रा. त्रिफलाचूर्णं, आम्रबीजस्य शुष्कीकृतं चूर्णं १२५ ग्रा. सम्मेल्य प्रातः, सायं सम्मेलनं कुर्यात् एवं सम्मेलनात्परं तथैव किञ्चित् तैलं निष्कास्य, संशोद्य केशतैलवत् प्रयोगं कुर्यात्। अनेन केशपात समस्यादिकं न्यूनीभवन्ति, केशाः मृदुत्वं प्राप्नुवन्ति च।

**व्रणेषु** - त्रिफलान् दाहयित्वा भस्मं कृत्वा, संशोद्य किञ्चित् भस्मं तैलेन सह मेलयित्वा उपर्यावर्तनरूपेण लेपनेन व्रणेषु लाभः भवति। चर्मव्याधिषु अपि औषधस्य फलितं दृश्यते।

**त्रिफला कषायः** - अर्ध ली. जले १० ग्रा. त्रिफलचूर्णं प्रक्षिप्य, उष्णं कृत्वा, संशोधनेन त्रिफला कषायस्य निर्माणं भवति। एनम् उपर्यावतनरूपेण प्रयोगं कुर्मश्चेत् व्रणाः न्यूनीभवन्ति। मुखप्रक्षालनेन मुखस्य रोगाः नश्यन्ति। शुभ्र वस्त्रं कषाये स्थाप्य पुनः निष्कास्य नेत्रोपरि स्थापनेन नेत्रसमस्याः दूरीभवन्ति। एनमेव कषायं किञ्चिदुष्णं कृत्वा शिरोपरि स्थाप्य, शीकया (अरिष्टया) इव शिरस्नानेन केशसमस्याः दूरीभवन्ति।

**अधिक स्वेदनिवृत्यै** - ३० ग्रा. त्रिफला चूर्णं, १०ग्रा. शुण्ठी चूर्णं, १० ग्रा. मुस्टचूर्णं, १०ग्रा. यष्टिमधुचूर्णं, १० ग्रा. जटामांसी चूर्णं सम्मेलनं कृत्वा स्थाप्य, प्रतिदिनं त्रिषु कालेषु १,२ ग्रा. चूर्णं ५० मि.ली. जले सम्मेल्य सेवनं कुर्यात्।

**दन्तपीडायां** - प्रतिदिनम् एकवारं त्रिफलाचूर्णं दन्तधावनचूर्णतया उपयोगं कुर्मश्चेत् दन्तपीडाः, रक्तस्रवणादयः न्यूनीभवन्ति। एवमेव दन्ताः दृढाः भवन्ति।

महत्रिफलादिघृतम्, त्रिफलासवः, सप्तामृतलोह प्रभृतिषु औषधनिर्माणेऽपि त्रिफलायाः उपयोगं कुर्वन्ति।



Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.

 तिरुमलतिरुपतिदेवस्थानम्

'सप्तगिरिः' आध्यात्मिकमासपत्रिका (तेलुगु, तमिलम्, हिन्दी, आङ्गलम्, कन्नड संस्कृतम्)

गृहं गृहं सप्तगिरिः!



श्रीस्वामिनः अक्षरलक्ष्मीः!

कलियुगप्रत्यक्षदैवस्य श्रीवेङ्कटेशस्य दिव्यवैभवम्
प्रतिमासम्... सप्तगिरिपत्रिकायां पश्यन्तु.. पठन्तु




भगवन्तं द्रष्टुं
देवदेवं प्राप्तुं नाना मार्गाः,
पद्धत्यःसन्ति।
आपन्निवारकं सप्तगिरीशं
केचन पुष्पैः अर्चन्ति
केचन अक्षरपुष्पैः पूजयन्ति




श्रीस्वामिनः अक्षरप्रसादरूपस्य सप्तगिरि पठनं
पाठनमपि तस्यसेवा एव।

प्रतिमासं.... सप्तगिरिं पठन्तु... आत्मीयैः पाठयन्तु!
प्रतिमासं श्रीस्वामिनं दर्शनं कुर्वन्तु.. तिरुमलविशेषान् जानन्तु।

सप्तगिरि अभिवृद्धये आकाङ्क्षन्तु!
सप्तगिरि मासपत्रिकायाः ग्राहकाः भवन्तु



## ग्राहकत्व विवराणि

एकपत्रिका... - रू.५/-
वार्षिकग्राहकत्वम् - रू.६०/-
जीवनग्राहकत्वम् ... रू.५००/-
विदेशेभ्यः वार्षिकग्राहकत्वम्.. रू.८५०/-
सूचना - संस्कृतपत्रिकायाः जीवनग्राहकत्वं नास्ति।




कार्यलयस्य कार्यदिनेषु
'सप्तगिरिः' मासपत्रिकायाः सम्बन्धितानां
पूर्ण विवराणां कृते
सम्पर्क दूरवाणी संख्याः -
कार्यालयः ०८७७ - २२६४५४३
डि.टि.पि. विभागः ०८७७ - २२६४३५९
संपादकः ०८७७ - २२६४३६०

सङ्केतः
प्रधानसम्पादकः,
'सप्तगिरि' मासपत्रिका कार्यालयः,
ति.ति.दे. प्रेस् काम्पोण्ड्,
के.टि.रोड्, तिरुपतिः - ५१७ ५०७

सूचनानाम्, आक्षेपाणां च कृते सम्पर्क कुर्वन्तु
sapthagiri_helpdesk@tirumala.org



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY
Published by Tirumala Tirupati Devasthanams 25-02-2019

**क्षीराब्धिकन्यकायै श्रीमहालक्ष्म्यै**
**नीरजालयायै नीराजनम्।**

\- अन्नमय्या

(२१.०३.२०१९ श्रीमहालक्ष्मीजयन्ती)